# इन्द्रविजयः



यत्र प्रदर्श्या विषयाः पुरातना यत्र प्रकारोऽभिनवः प्रदर्शने ।
यत्र प्रमाणं श्रुतयः सयुक्तयस्तद् ब्रह्मविज्ञानमिदं विमृश्यताम् ॥




प्रणेता

श्रीमधुसूदनशर्मा

विद्यावाचस्पतिः

जयपुर राजकीय पण्डितसभाप्रमुख महामहोपदेशक

श्रीमधुसूदन विद्यावाचस्पतिप्रणीते ब्रह्मविज्ञान-

शास्त्रे द्वादशवादग्रन्थाः

| | | |
|---|---|---|
| १—विज्ञानेतिवृत्तवादः | ५—अपरवादः | ९—अहोरात्रवादः |
| २—सदसद्वादः | ६—आवरणवादः | १०—दैववादः |
| ३—रजोवादः | ७—अम्भोवादः | ११—संशयोच्छेदवादः |
| ४—व्योमवादः | ८—अमृतमृत्युवादः | १२—सिद्धान्तवादः |

एषु प्रथमे विज्ञानेतिवृत्तवादे

पञ्चोपाख्यानानि

१—जगद्गुरुब्रह्मोपाख्यानम्

२—स्वर्गदैवतोपाख्यानम्    ४—पारिषदब्रह्मोपाख्यानम्

३—भारतवर्षीयार्योपाख्यानम्    ५—द्वादशविज्ञानोपाख्यानम्

तेषु तृतीयो भारतवर्षीयार्योपाख्यानरूपोऽयम्

# इन्द्रविजयः

तत्र पञ्च प्रक्रमाः

| | |
|---|---|
| १—भारतपरिचयः | ( भौगोलिकरहस्यम् ) |
| २—आर्यदासीयः | ( दस्यूपद्रवाभिज्ञानम् ) |
| ३—विज्ञानभवनम् | ( सूर्यसदनाभिज्ञानम् ) |
| ४—दस्युनिग्रहः | ( दस्युसंहारयुद्धम् ) |
| ५—विजयाभिनन्दनः | ( युद्धशान्तिमहोत्सवः ) |

संपादकः प्रकाशकश्च

श्रीआद्यादत्त ठाकुरः एम्० ए०

प्रथमावृत्तिः १००० } १९२० { मूल्यम् रूप्यकत्रयम्

अथेन्द्रविजयनाम्नि वैदिके ऐतिहासिके काव्ये पञ्चप्रक्रमाः। तद् यथा—भारतपरिचयप्रक्रमः। आर्य्यंन्नासीयप्रक्रमः। विज्ञानभवनप्रक्रमः। दस्युनिग्रहप्रक्रमः। विजयाभिनन्दनप्रक्रमः—इति॥ तत्रादौ भारतपरिचयस्य विषयसूची प्रदर्श्यते—

## भारतपरिचयप्रक्रमे ११ प्रसङ्गाः—

### १—त्रैलोक्यप्रसङ्गः

१ दिव्यशारीरभौमभेदात् त्रैलोक्यं त्रिविधम्

 १ दिव्यत्रैलोक्यम्

 २ शारीरत्रैलोक्यम्

 ३ भौमत्रैलोक्यम्

२ भौमत्रैलोक्यवासिषु औपचारिकाः शब्दव्यपदेशाः

३ प्राचीनत्रैलोक्ये एशियादेशेऽद्यापि त्रैलोक्यविभागाभासः

४ तातारस्य रूसदेशस्य च पुरायुगे भौमस्वर्गत्वम्

५ सायिबीरियोत्तरीयकतिचिद्भागस्य समुद्रमग्नत्वम्

६ स्वर्गीयविष्टपत्रयविध्वंसे दैवो हेतुः

७ विज्ञाने दिव्याया इवेतिहासे भौम्यास्त्रिलोक्या व्यवहारः

८ भारतवर्षस्य भौमत्रैलोक्यान्तर्गतपृथ्वीलोकत्वम्

### २—नामधेयप्रसङ्गः

१ भारतवर्षस्य चत्वारि नामानि

२ भारतशब्दव्यपदेशे मतचतुष्टये पौराणिकं प्रथमं मतम्

३ पौराणिकं द्वितीयं मतम्

४ वैदिकमतानुसन्धानम्

५ लोकमतम्

६ हिन्दुस्तानशब्दस्य भारतैकदेशसंज्ञात्वव्यवस्था

### ३—सीमाप्रसङ्गः

१ पौरस्त्यपाश्चात्यभेदात् भारतवर्षद्वैविध्ये चतुर्दशप्रमाणानि

अथेन्द्रविजयनाम्नि वैदिके ऐतिहासिके काव्ये पञ्चप्रक्रमाः । तद् यथा—भारतपरिचयप्रक्रमः । आर्य्यदालीयप्रक्रमः । विज्ञानभवनप्रक्रमः । दस्युनिग्रहप्रक्रमः । विजयाभिनन्दनप्रक्रमः—इति ॥ तत्रादौ भारतपरिचयस्य विषयसूची प्रदर्श्यते—

## भारतपरिचयप्रक्रमे ११ प्रसङ्गाः—

### १—त्रैलोक्यप्रसङ्गः

१ दिव्यशारीरभौमभेदात् त्रैलोक्यं त्रिविधम्

- १ दिव्यत्रैलोक्यम्
- २ शारीरत्रैलोक्यम्
- ३ भौमत्रैलोक्यम्

२ भौमत्रैलोक्यवासिषु औपचारिकाः शब्दव्यपदेशाः

३ प्राचीनत्रैलोक्ये एशियादेशेऽपि त्रैलोक्यविभागाभासः

४ तातारस्य रूसदेशस्य च पुरायुगे भौमस्वर्गत्वम्

५ सायिबेरियोत्तरीयकतिचिद्भागस्य समुद्रमग्नत्वम्

६ स्वर्गीयविष्टपत्रयविध्वंसे दैवो हेतुः

७ विज्ञाने दिव्याया इवेतिहासे भौम्यास्त्रिलोक्या व्यवहारः

८ भारतवर्षस्य भौमत्रैलोक्यान्तर्गतपृथ्वीलोकत्वम्

### २—नामधेयप्रसङ्गः

१ भारतवर्षस्य चत्वारि नामानि

२ भारतशब्दव्यपदेशे मतचतुष्टये पौराणिकं प्रथमं मतम्

३ पौराणिकं द्वितीयं मतम्

४ वैदिकमतानुसन्धानम्

५ लोकमतम्

६ हिन्दुस्तानशब्दस्य भारतैकदेशसंज्ञात्वव्यवस्था

### ३—सीमाप्रसङ्गः

१ पौरस्त्यपाश्चात्यभेदात् भारतवर्षद्वैविध्ये चतुर्दशप्रमाणानि

१ पुरायुगीयाः संज्ञाशब्दविशेषाः प्रथमं प्रमाणम्

१ सिन्धुस्थानपारस्थानशब्दावन्योन्यसापेक्षौ प्रान्तवाचकौ

२ पौरस्त्यभारते आर्य्यावर्तशब्दवत्पश्चिमभारते आय्यीयणशब्दः

३ पश्चिमभारतस्य ओरियंसंज्ञाऽप्यार्य्यवंशनिवासमूला

४ ओरियंसशब्दाभिधानेऽन्यहेतूपन्यासः

५ एरियानाशब्दोऽप्यार्य्यनिवासमूलः

६ इण्डियावामनियादिशब्दा अप्यार्य्यनिवासमूलाः

२ अवरयुगीयाः संज्ञाविशेषा द्वितीयं प्रमाणम्

१ ओरियंसशब्दवत् पश्चिमे भारते पश्चात् खुरासानशब्दः

२ पश्चिमभारते ईरानशब्दोऽप्यार्य्यनिवासमूलकः

३ पश्चिमभारते ओरियंसपारस्थानखुरासानादिशब्दानां शासनभेदेन भिन्नकालप्रयोगाः

४ ईरानखुरासानपर्शियादिशब्दानां महादेशवाचिनामपि कालभेदेन तत्प्रान्तमात्राभिधायित्वम्

५ नियतसंज्ञाव्यवस्थापकभारतीयानां भुवनकोशशास्त्रे शासनमूलकसंज्ञाप्रभेदानामनादरः

३ इन्द्रवरुणनिमित्ते ब्राह्मणानां वैज्ञानिकं वाग्युद्धं तृतीयं प्रमाणम्

आसुरधर्म्मं प्रविशतो जरथुस्त्रस्य देवेन्द्रनिन्दकत्वं विरोधहेतुः

इन्द्रप्रियसोमप्रतिद्वन्द्वितया वरुणेन सुरानिर्म्माणम्

भार्ग्गवैरिन्द्राधिक्षेपः

इन्द्राणीकृतः क्रोधः

इन्द्राणीं प्रति इन्द्रकृता परिसान्त्वना

इन्द्राणीं प्रति वृषाकपिकृता परिसान्त्वना

एतदाख्यानस्य ऋग्वेदसंहितायामुल्लेखः

इन्द्राणीक्रोधविषया वेदमन्त्राः

देवेन्द्रवृषाकपिकृतपरिसान्त्वना मन्त्राः

आसुरेन्द्रवृषाकपिकृतपरिसान्त्वना मन्त्राः

देवेन्द्रासुरेन्द्रयोर्वृषाकप्योः सन्धिशान्तिः

क्रमशस्तत्रैव ब्राह्मणानां वैज्ञानिकविप्रतिपत्तिप्रारम्भः

तत्र तावत्संक्षेपतो वरुणपरमासुरविज्ञानम्

अथ प्रतिवादे संक्षेपत इन्द्रपरं दैवविज्ञानम्

अथेन्द्रपक्ष्यैर्ब्राह्मणैरुद्घोषितं दैवेन्द्रमहत्त्वम्—काण्वः । नृमेधाः । हिरण्य-स्तूपः । वामदेवः । रेणुर्वैश्वामित्रः । पूरणो वैश्वामित्रः । गर्गः ।

इत्येतेषां ब्राह्मणानामभ्यर्थनाभिरुत्तेजितेन स्वयं दैवेन्द्रेणासुरनिहननम्

असुरपराभवानन्तरे—"यदचक्रेः पुरुहन्मा श्रुतकक्षः ईमवचिः—" इत्येतेषां पुनर्ब्राह्मणानां प्रलपनम् ।

वरुणानन्तु बृहद्दिवस्य कालेन उन्नतत्वम्

आथर्वणेन बृहद्दिवेन दैवेन्द्राभिनन्दनम्

औतथ्येन दीर्घतमसा आङ्गिरसेन कुत्सेन च वरुणस्याभिव्याख्यानम्

अथ वरुणपक्ष्यैर्ब्राह्मणैरुद्घोषितं वरुणमहत्त्वम्

अपरे सुपर्णभरद्वाजवामदेवादयो ब्राह्मणा उभयोः साम्येन महिमानमभ्युप-गच्छन्ति स्म

पक्षत्रयवतां ब्राह्मणानां विज्ञानविरोधे विचारसमितिः

इन्द्रपक्ष्याणां विचारसमितौ इन्द्राय पुनः सोमाभिषवार्थं हिरण्यगर्भ-नियोगः

हिरण्यगर्भेणेन्द्राय हविर्दानप्रत्याख्यानम्

हिरण्यगर्भतात्पर्यविषयो विज्ञानम्

इन्द्राय सोमाभिषवार्थं वसिष्ठनियोगः

वसिष्ठेनेन्द्रपरितोषार्थं सोमयज्ञकरणम्

( वसिष्ठः ( ७ । ३२ ) इन्द्राय स्तौति )

( पुनर्वसिष्ठः ( ७ । २७ । २६ ) इन्द्रं स्तौति )

वरुणेन क्रुद्धेन वसिष्ठनिग्रहः

वसिष्ठस्य वरुणाभ्यर्थनामन्त्राः

निगडमुक्तेन वसिष्ठेन मेधातिथिवामदेवसहायेन इन्द्रावरुणयोः साम्योद्घोषः

वामदेवः इन्द्रावरुणौ सह स्तौति

मेधातिथिः काण्वः इन्द्रावरुणौ सह स्तौति

वसिष्ठकृता इन्द्रावरुणयोः सह स्तुतिः

इन्द्रावरुणयोः समत्वोपपादकं विज्ञानम्

उभयोः परितोषार्थमैन्द्रावरुणयोर्भारतवर्षयोर्मध्ये वसिष्ठाश्रमनिर्माणम्

इतिहासोपसंहारे अथर्वाभिज्ञानम्

मत्स्यानां मूजवतां महावृषाणां बाह्लीकानां च आथर्वणमतानुयायित्वम्

विरोधपरिहाराय ब्रह्मणा कृतः पूर्वपश्चिमभेदेन भारतवर्षस्य द्वेधो विभागः ।

४ भारतवर्षस्य भूपद्मचतुर्थांशत्वाख्यानं चतुर्थं प्रमाणम्

पृथ्वीमण्डलस्य ( भूगोलस्य ) पद्मत्वाभ्युपगमः

भूपद्मस्य चतुःपत्त्रप्रतिपत्तिः

५ भारतवर्षाद् बहुदूरस्थानामुपद्वीपानां भारतीयत्वाख्यानं भारतवर्षस्य बहुविस्तृतप्रदेशत्वे पञ्चमं प्रमाणम्

इन्द्रद्युम्नादि नवद्वीपानां भारतवर्षीयत्वेनाख्यानाद्भारतवर्षस्य बहुविस्तृतत्वम्

६ सिन्धोः पश्चिमस्थानां देशानां भारतीयदेशत्वाख्यानं षष्ठं प्रमाणम्

गान्धारमद्रपारदपह्लवकाम्बोजशकयवनादिदेशानां भारतीयोदीच्यदेशत्वम्

गान्धारमद्रौ

पारदाः

पह्लवाः

कम्बोजाः

शकाः

यवनाः—यवनदेशाभिज्ञानम्

यूनानदेशीयेषु यवनशब्दप्रचारस्यार्वाचीनत्वम्

हैहयासुरजातीनां ग्रीकायिनाम्ना पुराप्रसिद्धानां निवासाभिजनदेशविशेषे ग्रीसशब्दयवनशब्दोपचारारम्भकालविचारः

७ गान्धारतः पश्चिमोत्तरेषु मद्रेषु यजुर्वेदाध्यापकस्य काण्वमहर्षेर्निवासः सप्तमं प्रमाणम्

वाजसनेयश्रुतौ काण्वमहर्षेर्मद्रदेशवासित्वाख्यानम्

मद्रदेशाभिज्ञाने नवीनमतप्रत्याख्यानम्

८ यवनदेशस्य भारतवर्षीयपश्चिमसीमात्वाख्यानमष्टमं प्रमाणम्

अवत्वे यवनशब्दस्य—अर्वदेशप्रान्तविशेषे यमनदेशे संकोचः

यवनशब्दस्य मुसलमानजातिपरत्वप्रत्याख्यानम्

पुरायुगे यवनशब्दस्य कैश्चिद्विया पश्चिमतो युद्धवियाप्रान्ते निरूढिः

९ व्याकरणभाष्ये तूरसपर्वताभिप्रायेणादर्शपर्वतस्य भारतीयपश्चिमसीमात्वाख्यानं नवमं प्रमाणम्

१० त्रिपुरासुरवधाख्याने लौहपुरस्य पृथ्वीलोकस्थत्वाख्यानं दशमं प्रमाणम्

त्रिपुराशीतिकाव्यप्रारम्भः

असुरविभागविशेषस्य मयसंज्ञा

मयसंबन्धित्रिपुरनिर्म्माणोत्तरं देवासुरेषु त्रिपुरनिर्म्माणप्रचारः

तारपुत्रस्य तारकस्य विद्युन्मालिकमलाक्षतारकाक्षाख्याः पुत्राः

तन्नाम्ना मयेन दैत्यत्रैलोक्ये त्रिपुरनिर्म्माणम्

महीसागरकूले मध्यमा राजतीपुरी

प्रतिपुरयन्त्रत्रयं मध्यमपुरे पर्व्वणि रोहिण्यंशे त्रिपुरसमागमः

तारसाद्रिशृङ्गे उत्तमा काञ्चनीपुरी

तुराद्रिदक्षिणोपत्यकायां अधमा आयसीपुरी

पुरत्रयाध्यक्षास्त्रयस्त्रिपुरासुराः

पुरत्रयस्य देशान्तरसंचारित्वम्

त्रिपुरस्य त्रिदुर्गत्वाद्वीराणां तत्र निवासाभावः

पुरत्रयभङ्गहेतुश्छिद्रम्

त्रिपुरस्याजेयत्वादसुराणां स्वर्गविजये ब्रह्मविष्टपस्य तातारतूरानादि

नामभिर्व्यपदेशाः

पश्चिमभारतेऽप्यसुरप्रवेशः

देवैरुपसन्नामकपुरत्रयनिर्म्माणम्

त्र्यम्बकेण त्रिपुरध्वंसः

महीसागरोपरिष्टात् त्रिपुरासुरपलायनम्

तारकासुरसंग्रामः

असुरराजविध्वंसेऽप्यसुरप्रजाविध्वंसाभावः

प्रकरणोपसंहारः

११ नवानां भारतीयद्वीपानां मध्ये हिन्दुस्तानस्य कुमारिकानाम्ना नवमद्वीपत्वाख्यानं भारतवर्षस्य हिन्दुस्तानमात्रपर्य्यवसायित्वाभावे एकादशं प्रमाणम्

१२ तुरुष्कदेशस्य भारतवर्षीयोत्तरसीमात्वाख्यानं द्वादशं प्रमाणम्

१३ पश्चिमसमुद्रस्य भारतवर्षीयपश्चिमसीमात्वाख्यानं त्रयोदशं प्रमाणम्

१४ ईरानविलोचिस्तानाफगानस्तानादिशब्दानां शासनक्रान्तिभेदमूलकत्वेनाव्यवस्थितत्वात् तेषां गणितव्यवस्थितभारतवर्षशब्दप्रयोगप्रतिरोधकत्वासंभवश्चतुर्दशं प्रमाणम्

४—उपद्वीपप्रसङ्गः

जम्बूद्वीपस्याष्टोपद्वीपाः

५—लङ्काप्रसङ्गः

द्वादशभिर्विप्रतिपत्तिभिः सिंहलद्वीपस्य लङ्कात्वभ्रमखण्डनम्

१ भारतीयशास्त्रे सिंहललङ्कयोः पृथक्त्वेनाख्यानम्

२ नितरां लङ्काशब्दस्य निरूढत्वात् सा चास्य सिंहलस्य लङ्कात्वाभावः

३ उज्जयिनीमध्यदेशस्य लङ्कात्वसिद्धान्तात् पञ्चभिर्देशान्तरांशैः पूर्वस्य सिंहलस्य लङ्कात्वाभावः

४ उज्जयिनीतो लङ्कायास्त्रयोदशांशान्तराख्यानाच्चतुर्विंशांशान्तरस्य सिंहलस्य लङ्कात्वाभावः

५ महेन्द्रगिरितो लङ्कायाश्चतुःशतक्रोशान्तरितत्वाख्यानाच्छतार्द्धप्रायक्रोशान्तरितस्य सिंहलस्य तत्त्वाभावः

६ लङ्कायाश्चतुःशतक्रोशदीर्घत्वाख्यानात् पंचत्रिंशदधिकशतक्रोशदीर्घस्य सिंहलस्य लङ्कात्वाभावः

७ लङ्कायां गङ्गाया अनुक्तेर्महावलिगङ्गायुक्तस्य सिंहलस्य लङ्कात्वाभावः

८ सिंहलस्य रावणविहारस्थानतया तत्राशोकवाटिकादिप्रसिद्धावपि तस्याः लङ्कात्वसिद्धौ प्रामाण्याभावः

९ सिंहलाभिप्रायेण प्रयुक्तस्य टाप्रोवेनशब्दस्य ताम्रपर्णीशब्दापभ्रंशतया टापूरावणत्वकल्पनाया असारत्वम्

१० रामेश्वरसिंहलयोरन्तरतो गिरीणां प्राकृतत्वात् प्लवमानसेतुस्तम्भकल्पनाया असारत्वम्

११ कालेन लङ्कायाः समुद्रगर्भे प्रवेशादनुपलब्धावपि अलङ्काया लङ्कात्वाख्यानं साहसमात्रम्

१२ लङ्काभूमावशिष्टप्रान्तयोर्लक्कदीवमालदीवयोरद्याप्युपलब्धत्वात् तद्भिन्नस्य सिंहलस्य लङ्कात्वाख्यानं साहसमात्रम्

लक्कादीवमालदीवयोर्लङ्काद्वीपत्वाभ्युपगमे षडुपष्टम्भकाणि प्रमाणानि।

६—भाषाप्रसङ्गः

दैवीमानुषीभेदाद् भारत्या भाषाया द्वैविध्यम्

छन्दोभाषा

छन्दोभाषायाः सर्वभाषामूलत्वम्

छन्दोभाषाया एव इण्डोयूरोपियनभाषात्वम्

भारतीभाषा

प्राच्योदीच्यभेदाद् ब्राह्मीभाषाद्वैविध्यम्

नागरीभाषा

७—वर्णमातृकाप्रसङ्गः

८—लिपिप्रसङ्गः

भारतीयब्राह्मीलिपेरद्य प्रचारलोपः

वेदमन्त्रनिर्माणकाले लिपिसामान्याभावमतखण्डनाय श्रुतिशब्द-व्यपदेशस्य मौलिकरहस्योपपादनम्

मन्त्रनिर्म्माणकाले लिपिसत्त्वे वैदिकं प्रथमं प्रमाणम्

,, ,, ,, द्वितीयं प्रमाणम्

,, ,, ,, तृतीयं प्रमाणम्

,, ,, ,, चतुर्थं प्रमाणम्

,, ,, ,, पञ्चमं प्रमाणम्

,, ,, ,, षष्ठं प्रमाणम्

,, ,, ,, सप्तमं प्रमाणम्

,, ,, ,, अष्टमं प्रमाणम्

मन्त्रनिर्म्माणकाले विद्यमानाया लिपेर्ब्राह्मी संज्ञा

९—सभ्यताप्रसङ्गः

१०—धर्म्मप्रसङ्गः

भारतीयधर्म्माणां वैज्ञानिकत्वम्

भारतीयधर्म्मस्वरूपम्

वैज्ञानिकधर्म्मनिबन्धनं भारतवर्षमहत्त्वम्

पौराणिकं भारतवर्षमाहात्म्यम्

भारतीयमहर्षीणां वैज्ञानिकतया दूरदर्शित्वम्

उन्नत्यवनतिविचारे भारतीयानां प्राचां विदुषां सिद्धान्तः

क्षीणभारतोपहासानौचित्यम्

धर्म्मरक्षोपेक्षाया भारतावनतिहेतुत्वम्

चातुर्वर्ण्यव्यवस्थाया अवनतिहेतुत्वाभावः
चातुर्वर्ण्यव्यवस्थाया एव भारतीयोन्नतिहेतुत्वम्
विज्ञानेनैतत्संपत्त्यै प्रयत्नतः शिल्पद्वारा धनाप्तेरपेक्षा
शिल्पविज्ञानस्य आत्मोन्नतिहेतुविज्ञानत्वाभावः
आत्मोन्नत्यपेक्षया धनोन्नतेरत्यन्तनिकृष्टत्वम्
तेजोविज्ञानाभ्यामिव धनेन स्वावलम्बनस्वातन्त्र्याभावः
धनोन्नतेर्निकृष्टत्वे त्रिदोषोत्पादकत्वहेतुः
नैसर्गिकोत्साहतेजसोर्मध्यमकक्षाकात्मोन्नतित्वम्
बाह्यसंपत्त्यपेक्षया प्राणसंपत्तेरन्तरङ्गत्वादुत्कृष्टत्वम्
प्राणसंपत्त्यपेक्षया विज्ञानसंपत्तेरात्यन्तिकोन्नतिहेतुत्वम्
अपस्वार्थिनां धनहेतुकसुखभोगप्रवणानां मोघजीवत्वम्
विज्ञानतेजसोर्ब्रह्मक्षत्रवीर्य्ययोरुत्पत्तौ चातुर्वर्ण्यधर्म्मानुपालनं हेतुः
अयथाकृतस्य चातुर्वर्ण्यधर्म्मस्य वीर्य्योत्पत्तौ हेतुत्वाभावः
भारतस्य पुनरभ्युत्थाने चातुर्वर्ण्यधर्म्मानुपालनस्यैव हेतुत्वम्
चातुर्वर्ण्यधर्म्मप्रवृत्त्यर्थं वैदिकविज्ञानप्रचारबाहुल्यस्यावश्यकत्वम्

११—विद्याप्रसङ्गः

भारतवर्षीय ब्रह्मवीर्य्याख्यानम्
भारतवर्षमहत्त्वहेतवश्चतुःषष्टि विद्याः
निगमविद्याप्रभेदा अष्टादश
आगमविद्याप्रभेदा विंशशतम्
दिव्यविद्याप्रभेदाश्चतुःषष्टि
आत्मोन्नतिहेतुभूतदिव्यविद्याप्रदर्शिनी तालिका
दिव्यविद्यानां प्रयोगोदाहरणानि
मनःसंयमाद्योगबलसिद्धयोऽष्टौ
इन्द्रियसंयमाद्दिव्यदृष्टिसिद्धयोऽष्टौ
हृदयसंयमात्तपोबलसिद्धयोऽष्टौ
प्राणसंयमाद् दैवबलसिद्धयोऽष्टौ
नैगमीयमन्त्रबलसिद्धयोऽष्टौ
आगमीयमन्त्रबलसिद्धयोऽष्टौ
महौषधिबलसिद्धयोऽष्टौ

यन्त्रबलसिद्धयोऽष्टौ
स्वयंवाहादयो यन्त्रविशेषाः
ब्राह्मणानामष्टभ्यो वीर्य्येभ्यः सर्वासां विद्यानां प्रादुर्भावः
सर्वविद्यानां सर्वार्थसिद्धौ हेतुत्वं तुल्यम्
नवनिधयः
निधिविशेषा आथर्वणवेदोक्ता अष्टौ मणयः
विद्याप्रकरणोपसंहारः
भारतवर्षीयक्षत्रवीर्य्याख्यानम्
युद्धोपयोगीनि चतुःषष्टि दिव्यास्त्राणि
दिव्यास्त्रनालिका
रामायणोक्तानि पञ्चाशद् दिव्यास्त्राणि
पञ्चाशद्दिव्यास्त्रनालिका
पञ्चाशद्दिव्यास्त्रसंहाराः
अष्टादशानां लौकिकास्त्राणां भाषानामानि
भारतवर्षीय विड्वीर्य्याख्यानम्
भारतीयानां भग्नावशिष्टानामपि शिल्पानामतुलनीयत्वम्

**इति भारतपरिचयस्य विषयसूची समाप्ता ।**

# आर्यदासीयाख्यो द्वितीयः प्रक्रमः

भारतीयार्याणां मौलिकभारतीयत्वसिद्धान्ताद् वैदेशिकत्वमतखण्डनम् ।

पुरायुगीयानां नराणां संक्षेपतस्त्रैविध्यम् ।

वेदोक्तसंग्रामानामारम्भकनिमित्तभेदात् पाञ्चविध्यम् ।

( १ ) विप्रकीर्णार्थं देवानामार्यैः संग्रामः

( २ ) गवार्थं पणिभिः सङ्ग्रामः

( ३ ) भूम्यर्थं देवानां दैत्यदानवैः सङ्ग्रामः

देवत्रैलोक्यादसुराणां बहिष्कारः ।

देवयजनभूमेस्त्रैलोक्यविभक्ताया ऐश्या संज्ञा ।

दहरैशिया स्वायम्भुवी । ( एशिया माइनर )

आसुरदेशास्त्रैलोक्यविभक्ताः ।

देवत्रिलोक्यामसुराक्रमणम् ।

इन्द्रविष्णुभ्यां वराहासुरप्रतीकारः ।

( ४ ) सोमार्थे देवानां दैत्यैः सङ्ग्रामः ।

सोमोच्छेदकासुरप्रतियोधार्थं गंधर्वविनियोगः ।

सोमसंरक्षणाय दैत्यान् प्रतियोद्धुं नियुक्ता गंधर्वाश्चतुर्धा ।

विश्वावसुप्रधानानां गंधर्वाणामाधिपत्ये चन्द्राभिषेकः ।

दैत्यैः कृतः सोमवल्लीविध्वंसः ।

सोमप्रातिनिध्येन सुरोत्पादनम् ।

सोमरसगुणप्रकाशका वेदमन्त्राः ।

इन्द्रभवने प्रत्यहं त्रिशतः सोमसरसामुपयोगः ।

ब्रह्मवीर्यम् ।

सोमध्वंसाद् ब्रह्मवीर्यापध्वंसः ।

( ५ ) सूर्यार्थे देवानां दस्युभिः संग्रामः ।

विज्ञानौपयिके सूर्येऽसुरप्रेरितानां दासानामाक्रमणम् ।

मनुष्यामनुष्यभेदात् दासानां त्रैविध्यम् ।

अमनुष्यदासानां प्रभवः ।

अमनुष्यदासप्रकृतिः ।

अमनुष्यदासप्रभेदाः ।

अमनुष्यदासानां प्रमुखाः कतिपये वेदे नामतो निर्दिष्टाः ।

अमनुष्यदासानां हिमवत्प्रदेशे सिन्धुनदप्रान्ते निवासः ।

सिन्धुनदप्रान्ते सप्तनदत्रयम् ।

पूर्वस्सप्तनदः ।

पश्चिमस्सप्तनदः ।

उत्तरस्सप्तनदः ।

पूर्वसप्तनदे दासकुलाभिजनासत्वात् तत्र युद्धाभावः ।

उत्तरसप्तनदवासिनां दासानां भारतवर्षीयत्वाभावः ।

भारतवर्षसीमाचतुष्टयी ।

भारतवर्षस्यैन्द्रवारुणाभ्यां पूर्वपश्चिमाभ्यां विभागः ।

पश्चिमभारते गान्धारदेशे दासकृतं प्रथमं युद्धम् ।

परमतनिरासेन सिद्धान्तस्थापनम् ।

दस्युयुद्धाद् बहुपूर्वमार्याणां भारतवर्षनिवासित्वे

पूर्वमनुष्याणां ऋभूणां भारतीयत्वं हेतुः ।

ऋभुपरिचयः ।

ऋभुभ्यः स्वकौशलं दर्शयितुं देवानामादेशः ।

पञ्चदशादिष्टान्यनादिष्टानि च बहूनि शिल्पानि प्रदर्शयितुमृभूणां स्वर्गे गमनम् ।

ऋभुकौशलविमुग्धैर्देवैर्ऋभुभ्यो देवत्वेन्द्रसखित्वादि पारितोषिकप्रदानम्

ऋभूणां यशःस्थैर्याय देवेन्द्रनिदेशाद्देवसभाविद्भिः कीर्तिसूक्तनिर्माणम् ।

दीर्घतमसा कृतमृभूणां कीर्तिसूक्तम्

वामदेवकृतमृभूणां कीर्तिसूक्तम्

युद्धात्प्राक्तनानामृभूणां भारतीयमनुष्यतया दस्युयुद्धात् प्रागेवार्याणां भारतीयत्वसिद्धान्तः ।

दस्युयुद्धात् बहुपूर्वं सभ्यानामार्याणां भारतनिवासित्वसिद्धांतः ।

# विज्ञानभवनं तृतीयः प्रसङ्गः

पुरायुगे दिव्यप्राणपरीक्षार्थं विज्ञानशालानिर्माणम् ।

आर्यानार्यविद्रोहनिमित्तभूतं सिन्धुसरस्वतीसंभेदे सूर्याधिष्ठानम् ।

सूर्यसंस्थानस्वरूपम् ।

सूर्यचक्रस्वरूपम् ।

सूर्यविज्ञानादाधिदैविकसिद्धिः ।

सूर्यविज्ञानादाधिभौतिकसिद्धिः ।

सूर्यविज्ञानादाध्यात्मिकसिद्धिः ।

सूर्याषसोः प्रथमतः सूर्यायतनप्रबन्धकर्तृत्वम् ।

एतशस्य मानुषस्याप्याधिदैविकवद्वृत्तिः ।

एतशाश्वकृतपरीक्षा ।

अहोरात्रवृत्तानां छन्दःसंज्ञानामेतशनाम्ना विवक्षितानां सूर्याश्वत्वम् ।

तत्परीक्षकत्वात् मुष्विराजस्य मनुष्यस्याप्येतशत्वम् ।

उषसः सूर्यायतनस्थाया बहवः प्रभेदाः ।

उषसो मानुष्या अप्याधिदैविकवद्वृत्तिः ।

विश्वामित्रो महर्षिरुषसं स्तौति ।

वसिष्ठो महर्षिरुषसं स्तौति ।

प्रस्कण्वः काण्व उषसं स्तौति ।

कक्षीवान् दैवतमस उषसं स्तौति ।

अष्टादंष्ट्रो वैरूप इन्द्रं स्तुवन्नुषसं स्तौति ।

विज्ञानशालास्थितत्वात् सूर्यचक्रद्वयादेकस्य देवेन्द्रेण परोहरणम् ।

उषःकारणात् सूर्याधिष्ठाने दस्यूनामाक्रमणमिन्द्रकुत्साभ्यां तन्निवर्हणञ्च ।

सूर्यसंस्थासंरक्षणार्थो देवेन्द्रकृतः स्थानिकः प्रबन्धः ।

अग्निपुरस्कृतानां देवानां स्वर्गे सहगमनम् ।

एतशेन सूर्यरथवहनम् ।

दिवि सूर्यारोपणस्थानम् ।

---

# दस्युनिग्रहश्चतुर्थः प्रक्रमः ।

भारतीयवर्षराष्ट्रे वैदेशिकानार्यदानवानामाक्रमणम् ।

दस्यूनामुपद्रावकाणां पुनराक्रमणम् ।

कुत्सकृतः कुत्सपराभवः ।

प्रगाथस्याभ्यर्थनासूक्तम् ।

मेधातिथेरभ्यर्थनीयं वाक्यम् ।

मेधातिथेरभ्यर्थनासूक्तम् ।

मेध्यातिथेरभ्यर्थनासूक्तम् ।

भर्गस्य प्रगाथस्याभ्यर्थनासूक्तम् ।

दस्युपरिपीडितानामार्याणामिन्द्रशरणे गमनम् ।

इन्द्राय कुत्सप्रमुखानां स्वदुःखाश्रावणम् ।

देवेन्द्रस्य दस्युनिग्रहणार्थं भारतवर्षं सपरिकरमागमनम् ।

दस्युनिग्रहार्थमिन्द्रस्याभिक्रमणम् ।

इन्द्रस्य निषधगिरौ समुपनिवेशः ।

निषधपर्वताभिज्ञानम् ।

निषधगिरौ विश्रान्तायेन्द्राय कुत्सस्य तत्कालेतिकर्तव्यतानुमन्त्रणम् ।

स्वागतीयसभां प्रस्तुत्य नाभाककृता इन्द्राग्न्योः स्वागतप्रशस्तयः ।

इन्द्रस्यातिथ्यपरिचर्या ।

विश्वामित्रकृतो देवेन्द्राय भोजनसमये मधुवाकः ।

देवभेदेन सोमपानसमयभेदः ।

निषधगिरौ समरारम्भणीयः सोमाभिषवः प्रमहाख्यः ।

वीरपानप्रमहे विश्वामित्रकृतो दस्युवधाभ्यर्थनासूक्तपाठः ।

नाभाकस्य काण्वस्य दस्युवधाभ्यर्थनासूक्तम् ।

दस्युनिग्रहोपायचिन्तायां कुत्सेनोपायप्रदर्शनम् ।

दस्युनिग्रहार्थं कुत्सप्रदर्शितमार्गाश्रयणम् ।

आयुराजस्य प्रतिष्ठानपुराधिष्ठातुः परिचयः ।

अप्रतिरथमहोवाकः ।

युद्धयात्रारम्भे राजपुरुषेणाप्रतिरथेनाप्रतिरथसूक्तपाठः ।

नृमेधपुरुमेधकृता मरुद्गणाभ्यर्थना ।

नृमेधपुरुमेधयोः इन्द्राय बृहद्गानम् ।

निषधात् प्रस्थितेनेन्द्रेण आदौ सरयुपारस्थार्यराजद्वयहननम् ।

सरयुनदीपरिचयः ।

अर्णचित्ररथयोः स्वजातिविद्वेषो वधे हेतुः ।

सरस्वतीप्रान्तवासिचित्रराजापेक्षया सरयुप्रान्तवासिनश्चित्ररथस्य भिन्नत्वम् ।

अर्णचित्ररथयोर्गन्धर्वत्वम् ।

त्रसदस्युराजराष्ट्राभिक्रमणम् ।

पर्वतयात्रायां रासभरथादयः परिकराः ।

रौहिणासुरनिपातः ।

अहिनिर्य्यातनम् ।

शंबरहत्यम् ।

कृष्णासुरत्वगुत्कर्तनम् ।

बङ्गृदादिदस्युग्रामाणां निर्मूलनम् ।

शुष्णस्य निगडबन्धनम् ।

कुत्सयवीयम् ।

पञ्चाशत्सहस्रदस्युनिग्रहणम् ।

# इन्द्रविजयाभिनन्दनं पञ्चमः प्रक्रमः

विज्ञानशालायां भारतीयार्यैः कृतः कृतज्ञतासूचको विजयमहोत्सवः ।

भारत्वे सूर्यसदने विजयाभिनन्दनमहोत्सवः प्रमहाख्यः ।

वाग्यानप्रमहाख्यत्रिविश्वालिप्रकृतमिन्द्राभिनन्दनम् ।

शान्तिकवीरपानानन्तरं प्रमहमुखेन कुत्सेन कृतमिन्द्रविजयाभिनन्दनसूक्तम् ।

इन्द्रविजयाभिनन्दने वार्षागिराणां कुत्ससहयोगेनात्मसमर्पणं सूक्तम् ।

कुत्सवदन्येषामप्यार्याणां धन्यवादरूपाः सूक्तवाकाः ।

हिरण्यस्तूपः ।

आङ्गिरसः सव्यः ।

गृत्समदः ।

वामदेवः ।

वामदेवं प्रति इन्द्रेण स्वचरितानुवर्णनम् ।

पुनर्वामदेवकृतमिन्द्रानुकीर्तनम् ।

बभ्रुरात्रेयः ।

अवस्युरात्रेयः ।

गातुरात्रेयः ।

संवरणः प्राजापत्यः ।

वसुक्रः ।

अष्टादंष्ट्रो वैरूपः ।

शतप्रभेदनो वैरूपः ।

बृहदुक्थो वामदेव्यः ।

वत्सः काण्वः ।

श्रुष्टिगुः काण्वः ।

मेध्यः काण्वः ।

नोधा गौतमः ।

[illegible] पौरवः ।

कृतज्ञतास्तुतिसूक्तपाठानन्तरमिन्द्रेण कुत्साय वेषभूषापरिच्छदैः

स्वसारूप्यं सोमसख्यिञ्चेति द्विविधं प्रीतिप्रसाददानम् ।

देवेन्द्रस्य पुनः स्वर्गे गमनम् ।

सभाविसर्जनावसरे जिगमिषुं देवेन्द्रं प्रति विश्वामित्रस्य प्रणयवचनम् ।

इन्द्राकुत्सयोर्वेषादिसाम्यकृतसारूप्ययोः स्वर्गाय सहप्रस्थानम् ।

स्वर्गे विजयाभिनन्दनीयः प्रमहः ।

इन्द्रस्तुतिविधानाय नृमेधपुरुमेधाभ्यां मरुद्गणमभिलक्ष्य मन्त्रपाठः ।

नृमेधपुरुमेधकृता देवेन्द्रस्तुतिः ।

पुनर्नृमेधपुरुमेधकृतं देवेन्द्राभिवर्णनम् ।

विरश्चीर्धुवानो वा ।

वभ्रो वैखानसः ।

सततुः स्वर्णरः ।

अभिगरप्रतिगरनियमः ।

सततुमुखेन देवानामभिगरे देवेन्द्रस्य प्रतिगरः ।

उदयनीयं परिशिष्टाख्यानम् ।

दस्युभिः सारस्वतसूर्यापहरणम् ।

सीरियादेशे बालवकभवननिर्म्माणम् ।

सरस्वत्याख्यब्राह्मीसूर्यप्रतिनिधित्वेनाब्राह्मीसूर्यप्रतिष्ठापना ।

पूर्वभारतस्य पश्चिमसीम्नि सूर्येऽस्तमिते पश्चिमभारतस्य पश्चिमसीम्नि किञ्चित्कालं सूर्यदर्शनम् ।

भारतवर्षीय वैदिकधर्मस्योत्थानपतनयोर्देवो हेतुः ।

पश्चिमदेशीयसूर्योदयानन्तरं पुनः पूर्वदिशायांसूर्योदयः ।

वैदेशिकदस्युभिः परिपीडितानां भारतीयानां स्वदेशीयानामन्ततो विजयः ।

**ग्रन्थसम्पूर्त्तिः ॥**

ओं तत् सत्

# अथ इन्द्रविजयः

विज्ञानेतिवृत्तवादस्य पञ्चोपाख्यानस्य तृतीयोपाख्यानरूपं भारतवर्षीयार्य्योपाख्यानं प्रारभ्यते ।

## भारतपरिचयोपक्रमे त्रैलोक्यप्रसंगः ॥ १ ॥

### ( १ ) दिव्यशारीरभौमभेदात् त्रैलोक्यं त्रिविधम्

देवयुगे त्रैलोक्यं त्रिविधमिदं ब्रह्मणाऽऽदिष्टम् ॥
अधिदैवतमध्यात्मं तत्तुल्येनाधिभूतं च ॥ १ ॥

**दिव्यत्रैलोक्यम् ।**

तद्दिव्यं शारीरं भौमं चेति क्रमादुक्तम् ॥
अग्निर्वायुश्चेन्द्रश्चेति त्रैलोक्यमिष्यते दिव्यम् ॥ २ ॥
पृथ्वीयमग्निलोकः सूर्य्यो द्यौरिन्द्रलोकः सः ॥
अनयोर्मध्ये वायोर्लोकः स्यादन्तरिक्षमिदम् ॥ ३ ॥
एतेऽतिष्ठावानो देवास्तेषु त्रयस्त्रिंशत् ॥
वसुरुद्रादित्याख्या द्वावन्यावश्विनौ चेति ॥ ४ ॥

**शारीरिकत्रैलोक्यम् ।**

गुदनाभ्यन्तःपृथ्वीर्द्यौर्हृत्कण्ठान्तरन्तरे व्योम ॥
उदरमुरश्च शिरश्चेत्यथवा देहे त्रिलोकी स्यात् ॥ ५ ॥
उदरगुहाऽग्नेर्लोको लोको वायोरुरोगुहाऽध्यात्मम् ॥
लोकः शिरोगुहैन्द्रः सर्वे प्राणास्तदायत्ताः ॥ ६ ॥

**भौमत्रैलोक्यम् ।**

एवं कृतमधिभूतं भूमौ त्रैलोक्यमत्र देवयुगे ॥
अधिदैवतवत् तत्र च विहितानि हि नामरूपकर्माणि ॥ ७ ॥
मनुजास्तैर्य्यग्योना देवा भौमत्रिलोकीति ॥
वैवस्वतमनुविट्त्वं व्यवस्थितं त्वत्र मनुजत्वम् ॥ ८ ॥
मानुषलोकः पृथ्वी तैर्य्यग्योनोऽन्तरिक्षं स्यात् ॥

द्वैधो लोको दैविके भौमं त्रैलोक्यमाख्यातम् ॥ ९ ॥
अधिपतिरग्निः पृथ्व्या वायुर्भौमोऽन्तरिक्षस्य ॥
इन्द्रो दिवस्पतिरित्थं व्यवहारो दिव्यवत् कल्प्याः ॥ १० ॥
दक्षिणसमुद्रतोऽग्नेर्लोकोऽस्ति हिमालयं यावत् ॥
अन्तरा वायोरैन्द्रो लोकश्चोत्तरकुरवान्तः ॥ ११ ॥
यत्तु हिमालयशैलादुत्तरमास्ते आन्तरो देशः ॥
वायोर्लोकः स इदं त्रैलोक्यं भूतले विद्यात् ॥ १२ ॥
भारतवर्षे लोकोऽग्नेर्वायव्यवर्षमिन्द्रलोकोऽन्यः ॥
अनयोर्मध्ये सकलं लोको देवाः स्थितास्तेषु ॥ १३ ॥
उत्तरकुरवः कथिताः श्रुतिभिः स्मृतिभिः पुराणेषु ॥
तेनाहि सन्त्यनन्तकाले भारते मेध्ये ॥ १४ ॥

भौमत्रैलोक्यवासिषु औपचारिकाः शब्दव्यपदेशाः ।

भारतवर्षस्थानामालोच्य नूनं मनुष्यदेवत्वम् ॥
उत्तरकुरुस्थितानां देवत्वं वा नरत्वमन्येषाम् ॥ १५ ॥
अग्नेः प्रजा मनुष्या भारतवर्षे नियन्त्रिता मनुना ॥
ऐन्द्री प्रजा तु देवा उत्तरकुरुषु स्थिता अभवन् ॥ १६ ॥

प्राचीनत्रैलोक्ये एशियादेशेऽद्यापि त्रैलोक्यविभागाभासः ।

भौमं यत् त्रैलोक्यं तदिदानीमेशियानाम्ना ॥
ख्यातं, तत्र च देवासुरसन्तानाः वसन्त्यद्य ॥ १७ ॥
अद्याप्येते देशास्त्रिधा विभक्ताः प्रदृश्यन्ते ॥
ते च त्रयोऽपि लोकाः प्रत्येकं स्युर्द्विधा भिन्नाः ॥ १८ ॥
हिन्दुस्तानं पारस्तानं चेत्यस्ते दक्षिणतः ॥
चीनस्तातारो वा मध्ये रूसो द्विधोत्तरतः ॥ १९ ॥

तातारस्य रूसदेशस्य च पुरायुगे भौमस्वर्गत्वम् ।

तुर्कैशियान्ततः प्राक् चीनात् प्रत्यक् तु विष्टपं ब्राह्मम् ॥
सकैशियादिपश्चिमरूसप्रान्तोऽत्र विष्टपं विष्णोः ॥ २० ॥
आसीद् विष्टपमैन्द्रं प्राग्रूसः सायिबीर्य्याख्यः ॥
इत्थं प्रसिध्यति स्म त्रिविष्टपं स्वर्गलोकोऽसौ ॥ २१ ॥

सायिबीरियोत्तरीयकतिचिद्भागस्य समुद्रमग्नत्वम् ।

यावानद्य स रूसस्तावानखिलः पुराऽभवत् स्वर्गः ॥

अपराजिता द्विगेषा यो देशः सायिबीरिया नाम ॥ २२ ॥
इह सायिबीरियासौ यद्यप्यत्यन्तासभ्यजनताढ्या ॥
कृच्छ्रप्रधानभूमिः किन्त्वासीन् सा न चेदृशी पूर्वम् ॥ २३ ॥
इह सायिबीरियान्तो यदुदक्प्रान्ते समुद्रतटम् ॥
यश्च समुद्रप्रान्तो भूरितुषारावृतोऽद्यापि ॥ २४ ॥
न्यू सायिबीरिया या प्रसिध्यति म्लेच्छभाषायाम् ॥
तत्र पुराऽऽसीन्नगरं नाद्यातं विबुधजनताढ्यम् ॥ २५ ॥
अपि वनमासीन्नानावृक्षाचितं पशुभिरावृतं बहुभिः ।
कालेन तत् तुषारप्रवर्षणाद् भ्रंशमायातम् ॥ २६ ॥
अतएव तत्र कूले समुद्रगर्भे कदा च लभ्यन्ते ॥
मेमाथनाम करिणां दन्ता बहुधाऽस्थिपञ्जरा अपि वा ॥ २७ ॥
सपादषड्ढस्तमितः स उच्चः पादोनैकादशहस्तदीर्घः ॥
सपादषड्ढस्तमितेन दन्तद्वयेन मेमाथकरी युतोऽभूत् ॥ २८ ॥
दन्तोऽस्य वक्रो महिषस्य शृङ्गवत् कृष्णानि लोमानि तनौ तथोर्णवत् ॥
न चेदृशः संप्रति दृश्यते करी यथा स मेमाथकरी पुराऽभवत् ॥ २९ ॥
एकोदराश्च द्विशिरोधराः पुरा मेरुण्डनामान इहाभवन् खगाः ॥
न चेदृशाः संप्रति पक्षिणः क्वचिद् दृश्यन्त आद्ये तु युगे यथाश्रुताः ॥ ३० ॥
विज्ञा न ते तेन पुरा युगेऽभवद् वनं पशुक्रान्तमिहोत्तराम्बुधेः ॥
स्थाने जनानां च पुराणि भूयसा तत्रैव सन्ति स्म च तर्हि देवताः ॥ ३१ ॥

### स्वर्गीयविष्टपत्रयविध्वंसे दैवो हेतुः ।

नाकस्थविष्णोः परितस्तु वेद दृग्[२४] व्यासार्धजे सञ्चरति ध्रुवं ध्रुवः ॥
वृत्ते ध्रुवस्तत्र तदा पुरा युगे प्राग्मेरुखस्वस्तिकगोऽभिजित्यभूत् ॥ ३२ ॥
ध्रुवादधस्तादतिशय्य शैत्यं प्रवर्तते तेन तदा पुरास्वे ॥
प्राग् मेरुदेशे बहुशैत्यमासीन् ननूत्तराम्भोधितटप्रदेशे ॥ ३३ ॥
एष ध्रुवो जनयते च तुषारवर्षा विभ्रंशयत्यपि पुरातनवासिलोकान् ॥
तौषारवर्षणवशादिव नाशमायन् प्राग् मेरुगाः कचिदुदक्कुरुभूमिखण्डाः ॥ ३४ ॥

### विज्ञाने दिव्याया इवेतिहासे भौम्याश्चित्रोक्त्या व्यवहारः ।

इत्थं त्रिलोकी त्रिविधा निरुक्ता दिव्या च भौमी च शरीरगा च ॥
त्रिधाग्निभिः सा शवसोनपाद्भिर्धृता पृथग् देवनिकायपूर्णा ॥ १ ॥
विज्ञानभाषासु यदि त्रिलोकीप्रसंग आयाति स दिव्य एव ॥

त्रैविध्यभावात् यदि त्रिलोकीप्रसङ्ग आयाति स भौम एव ॥ २ ॥
दिव्यत्रिलोकीमनु दिव्यदेवा भौमं त्रिलोकीमनु भौमदेवाः ॥
ऐतिह्यमत्र प्रवदन्ति तस्माद् भौमा हि भाव्या इह लोकदेवाः ॥ ३ ॥
ब्रह्मा गुरुः पिन्वतीह विद्यया शक्रः प्रभुः शास्त्यनुगृह्य वा बलैः ॥
विष्णुः सुहृद् यज्ञजनैरथाऽवति त्रयोऽपि भौमा इतिहासगा इह ॥ ४ ॥
विज्ञानेऽस्ति यथैतेषु त्रिषु सर्वं प्रतिष्ठितम् ॥
तथेह भौमस्वर्गेऽपि त्रिषु तेष्ववलम्बितम् ॥ ५ ॥

भारतवर्षस्य भौमत्रैलोक्यान्तर्गतपृथ्वीलोकत्वम् ।

* दिवमधिजग्मुर्या द्यां पूर्वयुगे सा बभूव वसुधायाम् ॥
उत्तरमेरौ स्वर्गस्तत्र स वसति स्म देवतावर्गः ॥ १ ॥
दक्षिणतः प्राग् मेरोरिरावतीनिर्गमाद् गिरेस्तूदक् ॥
अयमन्तरिक्षलोको वसतिः सा देवयोनीनाम् ॥ २ ॥
देशो य उदग् विषुवन् इरावतीनिर्गमाद् गिरेस्त्वर्वाक् ॥
तदिदं भारतवर्षं पृथ्वीलोकस्त्रिलोक्यां सः ॥ ३ ॥
भारतवर्षं मानुषदेशः शिखिशशिरविकुलजोऽत्र नरेशः ॥
धेनुभिरन्नधनैरपि धन्यः स हि देशानामिह मूर्द्धन्यः ॥ ४ ॥
यावान् मनुष्यलोकः सा पृथ्वी तच्च भारतं वर्षम् ॥
तत्र च मनुष्यशब्दः पृथ्वीशब्दश्च लाक्षणिकः ॥ ५ ॥

इति भारतपरिचये त्रैलोक्यप्रसंगः समाप्तः ॥ १ ॥

---

* भरद्वाज उवाच—अस्माल्लोकात्परो लोकः श्रूयते नोपलभ्यते ॥ तमहं ज्ञातुमिच्छामि तद्भवान् वक्तुमर्हति ॥ १ ॥ भृगुरुवाच । उत्तरे हिमवत्पार्श्वे पुण्ये सर्वगुणान्विते ॥ पुण्यः क्षेमश्च यो देशः स परो लोक उच्यते ॥ २ ॥ स स्वर्गसदृशो देशः तत्र युक्तः शुभा गुणाः । काले मृत्युः प्रभवति स्पृशन्ति व्याधयो न च ॥ ३ ॥

भारत० शान्ति प० मोक्षधर्मे

## नामधेयप्रसङ्गः ॥ २ ॥

भारतवर्षस्य चत्वारि नामानि ।

(४)             (१)

यदिदं भारतवर्षं स्कान्दे तन्नाभिवर्षमप्युक्तम् ॥

(२)             (३)

आर्षभवर्षं चान्यैर्हैमवतं वर्षमप्यन्यैः ॥ १ ॥

भरतस्यायं देशस्तस्माद् भारत इति प्रथितः ॥

भरतं त्वेतमनेकं स्मरन्ति पौराणिकाः सर्वे ॥ २ ॥

**(१) भारत शब्दव्यपदेशे मतचतुष्टये पौराणिकं प्रथमं मतम् ।**

स्वायंभुवस्य हि मनोराग्नीध्रः सूनुरस्य नाभिस्तु ॥

नाभेर्ऋषभस्तस्माद् भरतस्तस्यैष देशोऽभूत् ॥ ३ ॥

(१) "आग्नीध्रसूनोर्नाभेस्तु ऋषभोऽभूत् सुतो द्विज ॥

ऋषभाद् भरतो जज्ञे वीरः पुत्रशताद्वरः ॥ ४ ॥

हिमाह्वं दक्षिणं वर्षं भरताय पिता ददौ ॥

तस्मात्तु भारतं वर्षं तस्य नाम्ना महात्मनः" ॥ ५ ॥ ( इति मार्कं० अ० ५० )

(२) ततश्च भारतं वर्षमेतल्लोकेषु गीयते ॥

"भरताय यतः पित्रा दत्तं प्रातिष्ठता वनम्" ॥ ६ ॥ ( इति वैष्णवे १ अ० २ अं० ३२ श्लो० )

(३) "नाभेः पुत्रश्च ऋषभ ऋषभाद् भरतोऽभवत् ॥

तस्य नाम्ना त्विदं वर्षं भारतं चेति कीर्त्यते" ॥ ७ ॥ ( इति स्कान्दे माहे० कौमार ३७ अ० )

**(२) पौराणिकं द्वितीयं मतम् ।**

विदुरपरे दौष्यन्तिर्भरतः शाकुन्तलेयो यः ॥

वीरः स सर्वदमनस्तन्नाम्ना देश एषोऽस्ति ॥ १ ॥

(१) "तंसुरोधाच्च दुष्यन्तो दुष्यन्ताद् भरतोऽभवत् ॥

शकुंतलायां तु बली यस्य नाम्ना तु भारताः" ॥ २ ॥ ( अग्निपु० २७८ )

एष जगद्विजयीति प्रथितो वेदे पुराणे च ॥

काण्डे त्रयोदशे सोऽश्वमेधकृच्छतपथश्रुतावुक्तः ॥ ३ ॥

(२) "अष्टा सप्ततिं भरतो दौःषन्तिर्यमुना मनु ॥
गङ्गायां वृत्रघ्नेऽबध्नात्पञ्चपञ्चाशतं हयान् ॥ ४ ॥
शकुन्तला नाडपित्यप्सरा भरतं दधे ॥
पुरः सहस्रानिन्द्रायाश्वमेध्यान् य आहरत् ॥
विजित्य पृथ्वीं सर्वाम् ॥ ५ ॥
महदद्य भरतस्य न पूर्वे नापरे जनाः ॥
दिवं मर्त्य इव बाहुभ्यां नोदापुः पञ्चमानवाः" ॥ ६ ॥ ( शतपथे: १३ कां० )
स्कान्दे प्रभासखण्डे द्विसप्ततिशततमेऽध्याये ॥ ( १७२ )
यच्चार्षभभरतस्याश्वमेध कर्तृत्वमित्थमाख्यातम् ॥ ७ ॥
तत इदं भिन्नं मन्ये तमश्वमेधं यमाहरद् भरतः ॥
दौष्यन्तिः संख्याया भेदाद् वेदे पुराणे च ॥ ८ ॥

(३) "भरतो नाम राजाऽऽसीदाग्नीध्रः प्रथितः क्षितौ ॥
यस्येदं भारतं वर्षं नाम्ना लोकेषु गीयते ॥ ९ ॥
षट्पञ्चाशदश्वमेधान् गङ्गामनु चकार यः ( ५६ ) ॥
त्रयस्त्रिंशद् यमुनाप्रान्ते ( ३० ) भरतो लोक पूजितः" ॥ १० ॥
भरतस्यैताः कर्मगाथाः पूर्वैः पुरा गीताः ॥
भरतो हीमां पृथिवीं मनुष्यलोकं शशास चिरमेतम् ॥ ११ ॥
तन्नाम्नायं देशो भारत इति विश्रुतो लोके ॥
पौराणिकमतमेतत्सा भरताय प्रशस्तिचाटूक्तिः ॥ १२ ॥
भरतेनैतेनैव न भारता इति किल श्रुता देशाः ॥
कुलमेव तेन भारतमस्योक्तं भारताख्याने ॥ १३ ॥

(४) दुष्मन्तस्तु ततो राजा पुत्रं शाकुन्तलं तदा ॥
भरतं नामतः कृत्वा यौवराज्येऽभ्यषेचयत् ॥ १४ ॥
स राजा चक्रवर्त्यासीत् सार्वभौमः प्रतापवान् ॥
भरताद्भारती कीर्तिर्येनेदं भारतं कुलम् ॥ १५ ॥ ( आदिप० अ० ७४ )

**( ३ ) वैदिकमतानुसन्धानम्**

१ ब्रूमो वयं तु पूर्वं देवयुगेऽप्यत्र मानुषे लोके ॥
अग्निर्भरतोऽधिपतिर्नियुक्त इन्द्रेण मनुरासीत् ॥ १ ॥
२ आसीद् व्यवस्थितं तु त्रैलोक्यं यत्र देवयुगे ॥
यत्र च भारतवर्षं पृथ्वीमाहुर्मनुष्यलोकः स ॥ २ ॥

३ स्वर्गेश्वरो यथेन्द्रो यथान्तरिक्षेश्वरो वायुः ॥
पृथ्वीश्वरस्तथाऽग्निर्भरत इति ह्यस्य नामासीत् ॥ ३ ॥

४ देवेश्वरो यथेन्द्रो वायुरयं देवयोनीशः ॥
अग्निस्तथा मनुष्येश्वरो मतो भारतो नाम्ना ॥ ४ ॥

५ शवसोनपात एते दिवि मरुतो वायुरन्तरिक्षेऽस्मिन् ॥
भूमावग्निर्भारत एवं वरुणः समुद्रेऽप्सु ॥ ५ ॥

६ “दिवा यान्ति मरुतो भूम्याऽग्निरयं वातो अन्तरिक्षेण याति ॥
अद्भिर्याति वरुणः समुद्रैर्युष्मानिच्छन्तः शवसोनपातः” ॥ ६ ॥ ( ऋ० सं० १ । १६१ । १४ )

७ ऋग्वेदस्य तुरीयकमण्डलसूक्ते हि पञ्चविंशतिके ॥ ( ४ । २५ । ४ )
भारत इत्याख्यातं नामाग्नेर्भूमनुष्यलोकपतेः ॥ ७ ॥

८ “तस्मा अग्निर्भारतः शर्म यंसज्ज्योक् पश्यात्सूर्यमुच्चरन्तम् ॥
य इन्द्राय सुनवामेत्याह नरे नर्याय नृतमाय नृणाम्” ॥ ८ ॥ ( ४ । २५ । ४ )

९ अपि च यजुर्वेदस्यावृति चोक्तो दर्शपूर्णमासेष्टौ ॥
* अपि समिधेन्यकर्मणि उपमदनं भारतस्याग्नेः ॥ ९ ॥

१० अग्ने महां असि ब्राह्मण भारतेति ॥
अस्मिन्निगदे मन्त्रे भरतोऽग्निः पठ्यते स देवेभ्यः ॥
हव्यं भरति स्मेति ब्राह्मणवाग् भारतं ततः प्रथितम् ॥ १० ॥

११ अग्निर्वै भरतः । स वै देवेभ्यो हव्यं भरति ॥ ( इति कौषीतकी ब्राह्मणम् )
एष हि देवेभ्यो हव्यं भरति तस्माद् भरतोऽग्निरित्याहुः ॥
एष उ वा इमाः प्रजाः प्राणो
भूत्वा बिभर्ति तस्माद्वेवाह—भारतेति—तस्माद्वेवाहुः भरतवदिति ॥ ११ ॥
( इति वाजसनेय ब्राह्मणम् )

१२ वैवस्वतमनुर्भिन्नो मनुरग्निरयं मनुष्यलोकेशः ॥
भरतो नाम्ना तस्य च भवनानि त्रिषु समुद्रकूलेषु ॥ १ ॥

---

* अत्रापिशब्दो दर्शपूर्णमासेष्टौ प्रयाजब्राह्मणेऽग्निनिविदुपसंग्रहार्थः ॥ स यथा—“अग्निर्देवो दैव्यो होता देवान् यक्षद्विद्वांश्चिकित्वान् मनुष्वद् भरतवद्—इति—अनेन यजुर्मन्त्रेण होतृत्वप्रवरणे अग्निं प्रवृणीते ॥ अत्राधिदैविक आध्यात्मिको वा प्राणोऽग्निर्भरतसंज्ञक एव । तद्वत्त्वात्, तेन तादात्म्यविवक्षणाच्च मनुष्यलोकेश्वरस्य देवदूतस्याग्नेर्भरतवत्त्वं भारतत्वं भरतत्वं च विवक्षावशादिष्यते ॥ उभयथा व्यवहारदर्शनात् ॥

विवस्वद्दूतस्त्वमग्नेः श्रयते ॥

१३ अग्निर्जातो अथर्वणा विदद्विश्वा न काव्या ॥

भुवद्दूतो विवस्वतः ॥ ( ऋ० सं० १० । २२ । ५ )

१४ एवं भारतवर्षेऽस्वरन्ति मनुष्यलोकपतिम् ॥

शचन्त्यतपानमैन्द्रं महर्षयो वर्णयन्ति स्म ॥ २ ॥

१५ त्वमग्ने यज्ञानां होता विश्वेषां हितः ॥

देवेभिर्मानुषे जने ॥ ३ ॥ ( ६ । १६ । १ भरद्वाजो बार्हस्पत्यः )

१६ यो अग्निः सप्तमानुषः श्रितो विश्वेषु सिन्धुषु ॥

तमागन्म त्रिपस्त्यं मन्धातुर्दस्युहन्तममग्निं यज्ञेषु पूर्व्यम् ॥ ४ ॥ ( नाभाकः काण्वः । ८ । ३९ । ८ )

१७ ६ । १५ । ८ । त्वां दूतमग्ने अमृतं युगे युगे हव्यवाहं दधिरे पायुमीड्यम् ॥

देवासश्च मर्तासश्च जागृविं विभुं विश्पतिं नमसा निषेदिरे ॥ ५ ॥

१८ ६ । १५ । ९ । विभूषन्नग्न उभयाँ अनुव्रता दूतो देवानां रजसी समीयसे ॥

यत्ते धीतिं सुमतिमावृणीमहेऽधस्मा नस्त्रिवरूथः शिवो भवः ॥ ६ ॥

१९ ६ । १५ । १३ । अग्निर्होता गृहपतिः स राजा विश्वावेद् जनिमा जातवेदाः ॥

देवानामुतया मर्त्यानां यजिष्ठः स प्रयजता मृता वा ॥ ७ ॥

२० ६ । १६ । १९ । अग्निरगामि भारतो वृत्रहा पुरुचेतनः ॥

दिवोदासस्य सत्पतिः ॥ ८ ॥

२१ ६ । १६ । ४५ । उदग्ने भारत द्युमदजस्रेणदविद्युतत् ॥

शोचा विभाह्यजर ॥ ९ ॥

२२ ६ । १६ । ४ । त्वामीडे अधद्विताभरतोवाजिभिः शुनम् ॥ ईजे यज्ञेषु यज्ञियम् ॥ १० ॥

२३ इत्थं बहुधा बहवो महर्षयो भारतं वदन्त्यग्निम् ॥ तत्समसमयो भरतः स दिवोदासः स मान्धाता ॥ ११ ॥

२४ मत्स्यपुराणाध्याये चतुर्दशाधिकशतप्रमिते ॥ ( ११४ ) मनुसंबन्धाद् भारतमुक्तं स मनुस्तु लोकपालोऽग्निः ॥ १२ ॥

२५ "भरणात्प्रजनाच्चैष मनुर्भरत उच्यते ॥ एतन्निरुक्तवचनाद् वर्षं तद् भारतं स्मृतम् ॥ १३ ॥

२६ यस्त्वयं मानवो द्वीपस्तिर्यग्यामः प्रकीर्तितः ॥ य एवं जयते कृत्स्नं स सम्राडिति कीर्तितः" ॥ १४ ॥

( ४ ) लोकमतम् ।

भूमौ त्रेत्रीयाग्निः सस्यं भरते नरस्य देहेऽपि ॥
अग्निर्विश्वजनानां भरणप्रवणां मतिं धत्ते ॥ १ ॥
दातारो नोऽभिवर्द्धन्तां वेदाः संततिरेव च ॥
श्रद्धा च नो मा व्यगमद् बहुदेयं च नोऽस्त्विति ॥ २ ॥
अन्नं च नो बहुभवेदतिथींश्च लभेमहि ॥
याचितारश्च नः सन्तु मा च याचिष्म कंचन ॥ ३ ॥ इति ॥
एता आशिष एषामपेक्षिता भारतीयानाम् ॥
व्यवहारे मन्तव्या नीतिरियं भारतस्यास्य ॥ ४ ॥
अन्नैर्धनैर्यतोऽयं देशस्त्वेषां परेषां च ॥
उदरं भरति ततोऽयं देशो भारत इति प्रथितः ॥ ५ ॥

हिन्दुस्तानशब्दस्य भारतैकदेशसंज्ञात्वव्यवस्था ।

हिन्दुपदेन च हिन्दुस्तानपदेन च यदाहुरद्यतनाः ॥ भारतवर्षं तत् खलु नामार्द्धस्यास्य जानीयात् ॥१॥ सिन्धुनदोयं यद्दिशि तद्दिश्यं भारतं पूर्व्यम् ॥ सिन्धुस्थानपदेन व्यवजह्रुः सिन्धुपश्चिमगाः ॥२॥ * अपि पारसीकजातेरस्ति दसातीरनामके ग्रन्थे ॥ पौरस्त्य भारतार्थं हिन्दपदं सर्वतः पूर्वम् ॥३॥ † जरथुस्त्रस्य यदायतमस्त्यस्मिन् पञ्चषष्टितमम् (६५) ॥ तत्र व्यासो हिन्दुस्तानादागत उदीरितो भक्त्या ॥४॥ व्यासो नाम ब्राह्मण आयातो हिन्ददेशादय*॥ तत्सदृशो धीमानिह कश्चिन्नास्तीति तस्यार्थः ॥५॥ ‡ अपि सत्रिषष्टिशततम आयत उक्तं पुनस्तत्र ॥ व्याससमुनेर्बाह्लीके गमनं गस्तास्य नृपसमये ॥६॥ स प्रेत्यभावविषये व्यासात् संवदितुमेव गस्तास्यः । जरथुस्तमाजुहाव च धर्माचार्यं स्वदेशस्थम् ॥ ७ ॥ गुस्ताश्वापभ्रंशो गस्तास्पः क्षितिप ईराने । व्यासात् स पुनर्जन्मनि

* "वैव हिंद बाजगश्ते ।"
सपुन: ( व्यासः ) सिन्धुस्थानं प्रतिगतः ।

† "अकनू बिरहमने व्यास नाम, अज़ हिंद आमद, बसदानके आकिल चुना नेस्त" जरथुस्त की ६५वीं आयत ।
एको ब्राह्मणो व्यासो नाम सिन्धुस्थानादागतः । तत्सदृशो बुद्धिमान् कश्चिन्नास्ति ॥ ६५ ॥

‡ "चूं व्यास हिंदी बलख आमद । गस्तस्य जरतुस्तरा बख्वाँद" । १६३वीं आयत ।
यतो व्यासः सिन्धुस्थानीयो बाह्लीके आगतः । ( ततः ) गुस्ताश्वः ( ईरानभूपः ) जरथुस्तमाजुहाव ।

संदेहं स्वं निराचक्रे ॥ ८ ॥ *गस्तास्पेन तु पृष्टस्तद्व्यवहारानुसारतो व्यासः । हिन्दुस्तानाभिजनं विज्ञपयामास चात्मानम् ॥ ९ ॥

इति भारतपरिचये नामधेयप्रसङ्गः समाप्तः ॥ २ ॥

---

* "मनमरदे अम हिंदी नजादे" ।
अयमहं पुरुषः सिन्धुस्थानीयोऽनुजातः ।

# सीमाप्रसङ्गः॥ ३ ॥

(१) पौरस्त्यपाश्चात्यभेदाद् भारतवर्षद्वैविध्ये चतुर्दशप्रमाणानि ॥ १४ ॥

पौरस्त्यं पाश्चात्यं भारतवर्षं द्विधाकृतं भवति ॥
अनयोरस्ति विभाजक एष नदः सिन्धुरिति विद्यात् ॥ १ ॥
प्राच्यां दिशि तु समुद्रे यो देशः फारमोसाख्यः ॥
भारतवर्षस्यैषा सीमा पूर्वास्ति पूर्वस्य ॥ २ ॥
यच्च विलूचिस्तानं ह्यपगानस्तानमद्य यद् ब्रुवते ॥
ईरानदेश एवं मेसोपोटेमिया देशः ॥ ३ ॥
अर्वप्रान्ते यवनास्तत्पश्चाल्लोहिताम्भोधिः ॥
एतावत्खलु पश्चिमभारतवर्षं विजानीयात् ॥ ४ ॥
चीनसमुद्रारब्धं रक्तसमुद्रान्तमिष्यते यदिदम् ॥
भारतवर्षं तत्र च हेतव एते प्रदर्श्यन्ते ॥ ५ ॥

(२) तत्र पुरायुगीयाः संज्ञाशब्दविशेषाः प्रथमं प्रमाणम् ॥ १ ॥

सिन्धोः पश्चिमतो यः प्रदेश आलोहिताम्भोधेः ॥ तस्य च संज्ञाशब्दाः प्रमाण-
मस्यार्य्यदेशत्वे ॥ १ ॥

(३) सिन्धुस्थान-पारस्थानशब्दावन्योन्यसापेक्षौ प्रान्तवचनौ ।

अद्यत्वे यद् ब्रुवते भारतवर्षस्य सीमानम् ॥
*सिन्धुनदं सा हिन्दुस्थानस्यैतस्य सीमा स्यात् ॥ १ ॥
पूर्वं भारतवर्षं सिन्धुस्थानाख्यया ब्रुवते ॥
पश्चिमभारतवर्षं पारस्थानं पुरातना ऊचुः ॥ २ ॥
ईरानमात्रमद्य तु पारस्थानं ब्रवीति किन्त्वासीत् ॥
निखिलं पारस्थानं सिन्धोरालोहिताम्भोधेः ॥ ३ ॥

(४) पौरस्त्यभारते आर्य्यावर्तशब्दवत्पश्चिमभारते आर्य्यायणशब्दः ।

आर्य्यावर्तः शब्दो भवति यथाभारते पूर्वे ॥
पाश्चात्येपि तथास्मिन् आर्य्यायण शब्द ईराने ॥ १ ॥

---

* यत्तु—आ हिमवत आ च कुमार्य्याः सिन्धुर्वैतरणी नदी । सूर्य्यस्योदयनं पुरः । यावद्वा कृष्णमृगो विचरति तावद् ब्रह्मवर्चसम्—इति पैठीनसिना सिन्धोः सीमात्वमाख्यायते तद्वैदिकधर्माचरणयोग्यप्रदेशपरिच्छेदोपलक्षमर्वाचीनं न तु तत्पुरायुगीयं भारतवर्षसीमापेक्षम् । ब्रह्मावर्तब्रह्मर्षिदेशमध्यदेशादिवदार्य्यावर्तदेशस्यापि धर्म्मसंबन्धेन परिच्छिन्नत्वात् ॥

(५) पश्चिमभारतस्य औरियंससंज्ञाऽप्यार्य्यवंशनिवासमूला ।

रक्कसमुद्रात्प्रागथ सिन्धुनदात् प्रत्यगर्णवात्तूदक् ॥
आरालकाश्यपीयनजलधिभ्यां दक्षिणान् देशान् ॥ १ ॥
प्रागोरियंस [ ORIENS. ] नाम्नाऽनार्य्याः पूर्वे वदन्ति स्म ॥
तेन च पश्चिमभारतमार्य्यनिकेतनमिति प्रतीतं नः ॥ २ ॥

(६) मतान्तरेण ओरियंसशब्दाभिधानेऽन्यहेतूपन्यासः ।

ऋज्राश्वो नामासीत् पश्चिमभारतऋषिः कश्चित् ॥
जरथुस्त्रस्तस्याभूद्दौहित्रो ब्राह्मणद्वेषी ॥ ३ ॥
ब्राह्मणविद्वेषात् स हि तेषां ब्राह्मीं लिपिं त्यक्त्वा ॥
विपरीतां तु खरोष्ठीं लिपिमन्यां कल्पयामास ॥ ४ ॥
ऐन्द्रं देवाराधनधर्म्मं त्यक्त्वा स वारुणं विद्वान् ॥
असुराराधनधर्मं लोके बलवत् प्रचारयामास ॥ ५ ॥
विपरीताचरणात् ते मगा इति ख्यातिमायाताः ॥
शाकद्वीपाभिजना मगा इमे ब्राह्मणा अभवन् ॥ ६ ॥
बाह्लीकानुप्रान्तः शाकद्वीपः प्रसिद्ध आसीत् प्राक् ॥
शाकद्वीपाध्यक्षाः शका इति क्षत्रियाः प्रथिताः ॥ ७ ॥
ते म्लेच्छ भाषयोक्ताः स्कीथीया स्कीदिया देशाः ॥
शकबलदृप्तास्तु मगा युध्वा धर्मं प्रचारयामासुः ॥ ८ ॥
आर्ज्राश्वो जरथुस्त्रस्त्वसुरैरुक्तः स आरियस्य इति ॥
तन्मतधराश्च लोकास्तन्नाम्नैवारियस्य नाम्नोक्ताः ॥ ९ ॥
एषां यावान् देशो युद्धजितस्तन्मतानुगतः ॥
सोऽप्यारियस्य उक्तः कालेनाभूत् स ओरियंस इति ॥ १० ॥
इत्थं केचिद् ब्रुवते तथापि नैतावतः प्रदेशस्य ॥
आर्य्यक्षितिता हीयत ऋज्राश्वादेरिहार्य्यत्वात् ॥ ११ ॥
ऋज्राश्ववंशजातैरार्य्यैर्धृत आसुरो धर्म्मः ॥
तेन च पश्चिमभारतमार्य्यनिकेतनमिति ब्रूमः ॥ १२ ॥

(७) एरियाना शब्दोऽप्यार्य्यनिवासमूलः ।

प्रान्तोऽस्ति मार्गियाना तदधो हिन्दूकुशस्य दक्षिणतः ॥
निर्गत्य पश्चिमां प्रागथोत्तरां या शरीफिशैलस्य ॥ १३ ॥
पश्चिमलग्ना वहते तामाहुर्वैदिका नदीं सरयूम् ॥

तस्याः प्रान्तो दक्षिण उक्तोऽनार्यैः पुरैरियानेति ॥ १४ ॥

(८) इण्डिया—वामनियादिशब्दा अप्यार्य्यनिवासमूलाः।
प्राच्यां तदेरियानाप्रान्तात्प्रत्यग्गिरेः सुलेमानात् ॥
प्रान्तोऽयमिण्डियाख्यः कथितोनाऽर्य्यैः स आर्य्यवसतित्वात् ॥ १५ ॥
अत एव वेदमन्त्रश्चतुर्थमण्डलगते त्रिंशे ॥
सूक्तेऽष्टादश आर्य्यौ सरयोः पारे समामनति ॥ १६ ॥
"उतत्या सद्य आर्य्या सरयोरिन्द्र पारतः ॥
अर्णा चित्ररथावधीः" इति ( ४ । ३० । १८ ) ॥ १७ ॥
इति पुरायुगीया प्रादेशिकसंज्ञाविशेषाः प्रथमं प्रमाणम् ॥ १ ॥

---

अवर युगीयाः संज्ञाविशेषा द्वितीयं प्रमाणम् ॥ २ ॥

**ओरियंसशब्दवत् पश्चिमे भारते पश्चात् खुरासानशब्दः ।**

(१) विश्वामित्रः पूर्वं राजासीत् कान्यकुब्जदेशस्य ॥
स वसिष्ठस्य कदाचिद्धर्तुं गां नन्दिनीमैच्छत् ॥ १ ॥
सा नन्दिनी तु नैच्छत् तं विश्वामित्रमनुगन्तुम् ॥
क्रोधात्सा बहुबारं खुरतो भूमिं तदा व्यखनत् ॥ २ ॥
तत्र वसिष्ठो वरुणादैच्छत् साहाय्यमात्मकुलसुहृदः ॥
उक्तं वेदे सख्यं वरुणेन हि तद्वसिष्ठस्य ॥ ३ ॥
बाह्लीकदेशराजो वरुणोऽयं देवयुग आसीत् ॥
पारस्थानाधीशः सप्तसमुद्रेश्वरोऽसुराधीशः ॥ ४ ॥
जग्मुर्वरुणाज्ञप्ताः पारस्थानाधिवासिपञ्चगणाः ॥
पह्लव—पारद—यवनाः, शककाम्बोजौ परे च दरदाद्याः ॥ ५ ॥
नन्दिन्यास्तु खुरं ते मूर्द्ध्न्यादाय प्रणम्य तां भक्त्या ॥
वैश्वामित्रं सैन्यं व्यमर्दयन्नञ्जसा निखिलम् ॥ ६ ॥
तदवधि ते किल कथिताः खुरधाः खुरदास्तथा कुर्दाः ॥
तेषां जनपदसंघः खुर्दस्थानं खुरासानम् ॥ ७ ॥
मोगलसम्राड् बाबर आह खुरासानमात्मजीवन्याम् ॥
अफगानाश्च बलूचिन एकेऽप्याप्याहुरेवमिव ॥ ८ ॥
भारतवर्षीया अपि चक्रुस्तावत् प्रदेशाख्याः ॥
तच्छब्दव्यपदेशं प्रप्रोदितं शक्तिसंगमे तन्त्रे ॥ ९ ॥

हिङ्गुपीठं समासाद्य मक्केशान्तं सुरेश्वरि ॥
खुरासानाभिधो देशो म्लेच्छमार्गपरायणः ॥ इति ॥ १० ॥

**पश्चिमभारते ईरानशब्दोऽप्यार्य्यनिवासमूलकः ।**

( २ ) एवं पुनरिदमखिलं जनपदवृन्दं च सिन्धुतः पश्चात् ॥
भूमध्यसागरात् प्रागासीदीराननाम्नैकम् ॥ ११ ॥
ईरान व्यपदेशे त्वार्य्यायणतेरणत्वमरणस्त्रम् ॥
मूलमथर्वणि तदरणमुक्तं त्वार्य्यद्विषां वासात् ॥ १२ ॥
आर्य्यद्वेषिजनानामरणानां बाह्लिका देशाः ॥
अपि मूजवन्त एवं महावृषा वा विशिष्यासन् ॥ १३ ॥
अथवा कम्पनशीले प्रयुज्यते शब्द ईराणः ॥
भीतानां चानियताभिजनानां देश ईराणः ॥ १४ ॥
द्वादशकाण्डे प्रथमे सूक्तेऽष्टाविंशके मन्त्रे ( अथ० १२ । १ । २८ )
आथर्वणे स शब्दः प्रयुक्त आन्दोलितेऽर्थेऽस्ति ॥ १५ ॥
उदीराणा उतासीनास्तिष्ठन्तः प्रक्रामन्तः ॥
पद्भ्यां दक्षिणसव्याभ्यां मा व्यथिष्म हि भूम्याम् ॥ १६ ॥
( अथ० १२ । १ । २८ )

**पश्चिमभारते ओरियंसपारस्थानखुरासानादिशब्दानां शासनभेदेन भिन्नकाले प्रयोगाः ।**

( ३ ) इत्थं पश्चिमभारतमुक्तं क्वचिदोरियंसनाम्ना प्राक् ॥
पारस्थानं क्वचन क्वचन खुरासानमीरानम् ॥ १७ ॥

**ईरानखुरासानपर्सियादिशब्दानां महादेशवाचिनामपि कालभेदेन तत्प्रान्तमात्राभिधायित्वम् ।**

( ४ ) अद्य तु नैवं ब्रुवते नायं देशः समग्र एकोऽस्ति ॥
प्रान्तः पारस्थानं प्रान्त इरानं खुरासानम् ॥ १८ ॥
राज्ञां शासनभेदाद् व्यवहर्तॄणां च भेदतोऽज्ञानात् ॥
प्रान्तं हिरातसंज्ञं केवलमाहुः खुरासानम् ॥ १९ ॥
शासनभेदात् पश्चादफगानिस्तानतः खुरासानम् ॥
तत ईरानमिराको रोमकसामोऽथ पश्चिमाम्भोधिः ॥
अपि सीरियेति रोमकसामप्रान्तं विदुस्तथेराकम् ॥
कैलडिया चासुर्य्या मेसोपोटेमिया चेति ॥ २१ ॥

मिडिया नाम्नाऽप्यासीदा च खुरासानमन्वितः प्रान्तः ॥
अद्यत्वे पर्य्यायादीरानं पर्सियेत्याहुः ॥ २२ ॥
अपि वास्ति काश्यपीयनसिन्धोराग्नेयतः खुरासानम् ॥
तद्दक्षिणत इराकं तद्दक्षिणतस्तु पारस्यम् ॥ २३ ॥
(५) क्रान्तिप्रधान एषोऽस्त्यापृथिवी जन्मतो देशः ॥
इह परचक्रक्रांतिर्यथाऽभवन्नहि तथाऽन्यत्र ॥ २४ ॥
तस्मादनेकसीमा नामविभागाश्च दृश्यन्ते ॥
क्षुद्रैशियाप्रदेशादासिन्धोरस्य देशस्य ॥ २५ ॥

**नियतसंज्ञाव्यवस्थापकभारतीयानां भुवनकोशशास्त्रे शासनमूलकसंज्ञा प्रभेदानामनादरः ।**

(६) अस्तु तु यद्वा तद्वा शासनभेदात्तु देशभेदोऽयम् ॥
न च तच्छास्त्रं वक्तुं शक्यं तस्याव्यवस्थानात् ॥ २६ ॥
तस्मादिह भूगोलग्रन्थो वैदेशिको नितराम् ॥
शास्त्रं तथा यथेदं व्यवस्थितं भारतं शास्त्रम् ॥ २७ ॥
शासनदेशविभागो नियतो न भवति हि तेन तमुपेक्ष्य ॥
आर्य्या व्यवस्थितं प्राग् देशविभागं निसर्गजं ददृशुः ॥ २८ ॥
देशप्रकृतिः शास्ता न तु शास्तृप्रकृतिको देशः ॥
अस्तु च शास्ताऽन्योऽन्यो मुञ्चति देशो न चात्मनः प्रकृतिम् ॥ २९ ॥
तस्मात् सिन्धोः पश्चिमदेशोऽद्य तु शास्तृभेदेन ॥
यद्यपि पृथगिव दृष्टो वस्तुत इदमस्ति भारतं वर्षम् ॥ ३० ॥

**इत्यवरयुगीयाः संज्ञाविशेषा द्वितीयं प्रमाणम् ॥ २ ॥**

---

**इन्द्रवरुणनिमित्ते ब्राह्मणानां वैज्ञानिकं वाग्युद्धं तृतीयं प्रमाणम् ॥ ३ ॥**

भारतवर्षविभागद्वयहेतुर्ब्राह्मणानां प्राक् ॥
वैज्ञानिकवाक्समरस्तृतीयमस्ति प्रमाणमिह ॥ ३१ ॥
आसुरधर्मे प्रविशतो जरथुस्त्रस्य देवेन्द्रनिन्दकत्वं विरोधहेतुः ॥
बाह्लीके यो जज्ञे जरथुस्त्रस्तस्य समये प्राक् ॥
सौत्रामण्यामिष्टौ ब्राह्मणवृन्दे विरोधोऽभूत् ॥ ३२ ॥
आङ्गिरसो जरदष्टिर्ब्राह्मण आसीत् तथाप्ययं धृष्टः ॥
विद्विष्य देवमिन्द्रं वरुणस्तुद् धर्ममासुरं दध्रे (१)

येऽसून् प्राणान् दधते तेऽमी असुरा महाप्राणाः ॥
असुरत्वं तु न येषां तेऽमी देवाः "सुराःस्म" इत्यूचुः (१)

इन्द्रप्रियसोमप्रतिद्वन्द्वितया वरुणेन सुरानिर्म्माणम् ।

असुरा विनाश्य सोमं जनयामासुस्तु वारुणीं मदिराम् ॥
तां च सुरामिति जगदुः पीतामनुतां सुरान् पिबाम इति (२)
असुरवदेव त्वार्य्या अपि तां पातुं क्रमात् क्रमन्ते स्म ॥
अपि देवेन्द्रः सौत्रामण्यामिष्टौ सुरामपिबत् (४)
गुरुरसुराणामार्य्योऽनार्य्याणां यो न्युवास बाह्लीके ॥
आर्य्यैः सुरा न पेया बुद्धिहरीत्युपदिदेश तान् स भृगुः (५)
"सुरा वै मलमन्नानां पाप्मा च मलमुच्यते ॥
तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्" (६) (मनुस्मृतौ भृगुः)

आर्य्यैरिन्द्राधिक्षेपः ।

इन्द्रस्याधिक्षेपं कर्तुमिवैतेऽसुराः सुरायज्ञम् ॥
सौत्रामणीं विधातुं वृषाकपिं प्रेरयामासुः ॥ ३३ ॥
एष वृषाकपिरासीदसुरेन्द्रः प्राक् प्रियः सखेन्द्रस्य ॥
पुत्रत्वेन तमिन्द्रः प्रेम्णा ह स्मानुगृह्णाति ॥ ३४ ॥
वैकुण्ठस्य विकुण्ठागर्भोत्पन्नस्य दैवतेन्द्रस्य ॥
नाम वृषाकपिरासीत् नामैक्यात् सख्यमेतयोरभवत् ॥ ३५ ॥
देवेन्द्रः स वृषाकपिरसुरवृषाकपिकृते यज्ञे ॥
सोमं पातुमिहागादिन्द्राण्या सह तु सञ्ज्ञयाभिधया ॥ ३६ ॥
एष वृषाकपिरसुरस्तेने सौत्रामणीयज्ञम् ॥
तत्र सुरामपि सोमं देवेन्द्राय न्यवेदयत् पातुम् ॥ ३७ ॥
इन्द्रः पिबति सुरामिति पारस्थानाः प्रचक्रिरे निन्दाम् ॥
सौत्रामण्यामिष्टौ घोरविरोधं प्रचक्रिरेऽनिन्द्राः ॥ ३८ ॥
मन्त्रेष्वनिन्द्रशब्दः षट्स्वाम्नातः पुरा वरुणम् ॥
आराधयन्त एते नेन्द्रं देवं त्वमंसत हि ॥ ३९ ॥
इन्द्रः पिबति सुरामिति हन्त पिबामो वयं सोमम् ॥
इत्युक्त्वा तेऽनिन्द्रा असुराः सोमं बलादहरन् ॥ ४० ॥
इन्द्रनिवेदितसोमं यज्ञादपहृत्य तं पातुम् ॥
तत्र वृषाकपिमसुरं न्ययुञ्जताशौ पपौ सोमम् ॥ ४१ ॥

सोमं तत्र पिबन्तं दृष्ट्वेन्द्राणी वृषाकपिं पुत्रम् ॥
क्रोधादपगतचेताः स्वामिनमेवोपधर्षयामास ॥ ४२ ॥

इन्द्राणीकृतः क्रोधः ।

हन्त न किन्तेऽन्यत्रोपलभ्यते पीतये सोमः ॥
यदतिव्यथितो धावसि वृषाकपेरत्र यज्ञमिमम् ॥ ४३ ॥
किमनेनोपकृतं ते पुष्टमृगेणेति यस्मै त्वम् ॥
वितरसि सोमसदृक्षं बहुमूल्यं धनमनुग्रहात् क्षमसे ॥ ४४ ॥
यस्त्वं प्रियमित्र रक्षसि तं शूकरभक्षकः श्वाऽद्य ॥
कर्णेऽपि गृह्य भक्षतु मा जीवतु दुष्टजीवोऽयम् ॥ ४५ ॥
अहमस्मि वीरपत्नी वीरवती तामवीरावत् ॥
अवमनुतेऽयं धृष्टस्तदिदं क्षमसे कथं दृष्ट्वा ॥ ४६ ॥
इत्थं वृषाकपेः खल्वपराधान् क्षाम्यते तदेन्द्राय ॥
क्रोधादधिक्षिपन्तीमिन्द्राणीं तामुवाचेन्द्रः ॥ ४७ ॥

इन्द्राणीं प्रति इन्द्रकृता परिसान्त्वना ।

एष वृषाकपिरीजे सोमं सोतुं मयाज्ञप्तः ॥
अन्ये त्वसुरा नेदं मन्वत इति तद्भयात्स सोममपात् ॥ ४८ ॥
अयि भद्रकेशपाशे न त्वपराध्यति वृषाकपिस्तत्र ॥
किमभिक्रुध्यसि सहसा वृषाकपिं वीरपत्नी त्वम् ॥ ४९ ॥
न वृषाकपिं सखायं विना रमे देवि यद्द्वारा ॥
इदमासुरकुलतोऽप्यं प्रियं हविर्याति देवेषु ॥ ५० ॥
सोमं पातुमिहाहं नायातः किन्तु तन्मिषतः ॥
एमि समी क्षतुमेव त्वार्यं दासं विचेतुमिव ॥ ५१ ॥

इन्द्राणीं प्रति वृषाकपिकृता परिसान्त्वना ।

अथ च वृषाकपिरपि तामिन्द्राणीं प्रत्युवाच विनयेन ॥
इन्द्राणि नित्यसुभगे जरया म्रियते न जातु ते दयितः ॥ ५२ ॥
पञ्चत्रिंशन्ममस यातुदणः संप्रति पचन्ति भुक्तिकृते ॥
यानहमद्मि स्थूलो याभ्यां कुक्षी उभौ पृणन्ति मम ॥ ५३ ॥
ऐन्द्रं सोमं पिबतो मम पुनरेतान् पशून् भक्ष्यान् ॥
काचित्करं हविःप्रियमेष नवेन्द्रः स्वतन्त्रमम्भातु ॥ ५४ ॥
इन्द्रोयमसुरकन्यागर्भज एतस्य पत्नी च ॥

अस्ति पुलोमासुरजा तत इन्द्रोऽश्नातु गोमांसम् ॥ ५५ ॥
अयमिन्द्रो विश्वस्मादुत्तर इति हि प्रतिज्ञातम् ॥
इन्द्राण्यापीन्द्रेणापि वृषाकपिनाऽसुरेन्द्रेण ॥ ५६ ॥

एतदाख्यानस्य ऋग्वेदसंहितायामुल्लेखः ।

ऋग्वेदसंहितायां दशमे तन्मण्डले तदा सूक्ते ( १० । ८६ )
आख्यानमेतदुक्तं तन्मन्त्रा अत्र दर्श्यन्ते ॥ ५७ ॥

इन्द्राणी क्रोधविषया वेदमन्त्रा यथा ।

( १ ) पराहीन्द्र धावसि वृषाकपेरति व्यथिः ।
नो अह प्रविन्दस्यन्यत्र सोमपीतये ॥
विश्वस्मादिन्द्र उत्तरः ॥ ( १० । ८६ । २ ) ॥ १ ॥

( २ ) किमयं त्वां वृषाकपिश्चकार हरितो मृगः ॥
यस्मा इरस्यसी दुन्वर्यो वा पुष्टिमद्वसु ॥
विश्वस्मादिन्द्र उत्तरः ॥ (१० । ८६ । ३) ॥ २ ॥

( ३ ) यमिमं त्वं वृषाकपिं प्रियमिन्द्राभिरक्षसि ॥
श्वान्वस्य जम्भिषदपि कर्णे वराहयुः ॥
विश्वस्मादिन्द्र उत्तरः ॥ (१० । ८६ । ४) ॥ ३ ॥

( ४ ) अवीरामिव मामयं शरारुरभिमन्यते ॥
उताहमस्मि वीरिणीन्द्रपत्नी मरुत्सखा ॥
विश्वस्मादिन्द्र उत्तरः ॥ (१० । ८६ । ९) ॥ ४ ॥

देवेन्द्रवृषाकपिकृत परिसान्त्वना मन्त्रा यथा

( १ ) वि हि सोतोरसृक्षत नेन्द्रं देवममंसत ॥
यत्रामदद् वृषाकपिरर्यः पुष्टेषु मत्सखा ॥
विश्वस्मादिन्द्र उत्तरः ॥ (१० । ८६ । १) ॥ ५ ॥

( २ ) किं सुबाहो स्वङ्गुरे पृथुष्टो पृथुजाघने ॥
किं शूरपत्नि नस्त्वमभ्यमीषि वृषाकपिं ॥
विश्वस्मादिन्द्र उत्तरः ॥ (१० । ८६ । ८) ॥ ६ ॥

( ३ ) नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते ॥
यस्येदमप्यं हविः प्रियं देवेषु गच्छति ॥
विश्वस्मादिन्द्र उत्तरः ॥ (१० । ८६ । १२) ॥ ७ ॥

( ४ ) अयमेमि विचाकशद्विचिन्वन् दासमार्यम् ॥

पिबामि पाकसुत्वनोऽभिधीरमचाकशं ॥
विश्वस्मादिन्द्र उत्तरः (१० । ८६ । १६) ॥ ८ ॥

असुरेन्द्रवृषाकपिकृतपरिसान्त्वना मन्त्रा यथा ।

(१) इन्द्राणीमासु नारिषु सुभगामहमश्रवम् ॥
नह्यस्या अपरं चन जरसा मरते पतिः ॥
विश्वस्मादिन्द्र उत्तरः ॥ (१० । ८६ । ११) ॥ ६ ॥

(२) उक्षणो हि मे पञ्चदश साकं पचन्ति विंशतिम् ॥
उताहमद्मि पीव इदुभा कुक्षी पृणन्ति मे ॥
विश्वस्मादिन्द्र उत्तरः ॥ (१० । ८६ । १४) १० ॥

देवेन्द्रासुरेन्द्रयोर्वृषाकप्योः सन्धिशान्तिः ।

अपिबत् सुरां सुरेन्द्रः स चासुरेन्द्रोपिबत् सोमम् ॥
तत्रेन्द्रयोर्विवादोऽशाम्यत्कथमपि तयोर्नीत्या ॥ ५८ ॥

क्रमशस्तत्रैव ब्राह्मणानां वैज्ञानिकविप्रतिपत्तिप्रारम्भः ॥

वरुणस्य राजधानीनगरेऽस्मिन् किन्तु वाल्हीके ॥
यज्ञे समवेतानां विप्राणां विग्रहोऽत्यभवत् ॥ ५६ ॥
अग्निर्वसुभिः क्रमते सोमो रुद्रैर्मरुद्भिरिन्द्रोऽयम् ॥
आदित्यैरथ वरुणो विश्वे देवैर्बृहस्पतिः क्रान्तः ॥ ६० ॥
अग्निर्वसुभिः क्रमते, रुद्रैरिन्द्रोऽथ वरुण आदित्यैः ॥
सोमः पितृभिः क्रमते विश्वे देवैर्बृहस्पतिः क्रान्तः ॥ ६१ ॥
अग्निर्वसुभिः क्रमते वायू रुद्रैरथेन्द्र आदित्यैः ॥
सोमः पितृभिर्वरुणस्त्वद्भिर्विश्वै बृहस्पतिर्देवैः ॥ ६२ ॥
इत्थं त्रयः प्रवादा अभवन् वैज्ञानिके समरे ॥
असुराः प्रथमं पक्षं जगृहुस्तत्रोत्तमं त्वैन्द्राः ॥ ६३ ॥
❀ परमर्षयस्त्वपश्यन् न विसंवादावकाशमिह ॥

❀

| | १ | २ | ३ | ४ | ५ | ६ |
|---|---|---|---|---|---|---|
| | अग्निः | वायुः | सोमः | वरुणः | इन्द्रः | बृहस्पतिः |
| | वसुभिः | रुद्रैः | रुद्रैः पितृभिः | आदित्यैः अद्भिः | आदित्यैः रुद्रैःमरुद्भिः | विश्वैर्देवैः |
| | पृथ्वी | अन्तरिक्षः | अन्तरिक्षम् | द्यौः | द्यौः | दिवःपृष्ठम् |
| | १ | २ | २ | ३ | ३ | ४ |

शवसोनपात एते युञ्जन्त्यधिदैवतैस्तैस्तैः ॥ ६४ ॥
अग्निर्वायुश्चेन्द्रो रोदस्यां क्रन्दसी देवाः ॥
सन्ति बृहस्पतिसोमौ वरुणः स्वस्तेऽधिदैवतैः सयुजः ॥ ६५ ॥
पूर्वेषामयमुत्तम एष बृहस्पतिरथेन्द्रस्तु ॥
प्रथमोऽयमुत्तरेषामित्यृषिभिर्हि स्थितिर्दृष्टा ॥ ६६ ॥
इत्याह संयतीतोऽर्वाक् क्रमतो रोदसीदृष्ट्या ॥
पृथ्वीक्रमतस्त्वग्निः प्रथमस्तुर्यो बृहस्पतिः सोस्ति ॥ ६७ ॥
अग्निश्च वायुसोमौ सहेन्द्रवरुणौ बृहस्पतिश्चान्ते ॥
लोकचतुष्टयदेवा इत्थं क्रमसंनिविष्टास्ते ॥ ६८ ॥
अग्निर्वसुभिः प्रथमो विश्वैर्देवैर्बृहस्पतिः क्रमते ॥
वायू रुद्रैः सोमो रुद्रैः पितृभिश्च संयुङ्क्ते ॥ ६९ ॥
आदित्यैरपि रुद्रैर्मरुद्भिरिन्द्रः सजूर्भवति ॥
वरुणोऽद्भिश्चादित्यैर्युनक्ति नान्यैरिति ज्ञेयम् ॥ ७० ॥
इत्थं कृतसिद्धान्ते विज्ञाने निर्विवादेपि ॥
अधिकृत्येन्द्र वरुणं विप्रा विप्रोदिरे तत्र ॥ ७१ ॥
असुरो वरुणो मान्यो न त्विन्द्रो देव इत्यन्ये ॥
इन्द्रो देवो मान्यो नत्वसुरो वरुण इत्यन्ये ॥ ७२ ॥
जरदष्टयादयः केचिन्नेन्द्रं देवममंसत ॥
बृहद्दिवादयस्त्विन्द्रमाराध्यं निरधारयन् ॥ ७३ ॥

तत्र तावत्संक्षेपतो वरुणपरमासुरविज्ञानम् ।

वरुणेऽध्याहितमिन्द्रं पश्यन्तश्चक्षते त्वमी असुराः ॥
वरुणो भवतु स्वाराडिन्द्रः सम्राट् तथा हि विज्ञानम् ॥ ७४ ॥
भूयस्य आप एता कनीय एवात्र चेतना ज्योतिः ॥
अप्स्वेव तु चैतन्यं बुध्यति वरुणः परस्ततो ह्रीन्द्रात् ॥ ७५ ॥
भूतानि दैवतानि च जातान्यद्भ्योऽत एव ता आपः ॥
प्राणः प्रज्ञा चेन्द्रो भूतान्यालम्बते तानि ॥ ७६ ॥
देहेऽप्यधिका आपो लवणं चाधिकमिदं द्वयं वरुणः ॥
प्राणः प्रज्ञा चेष्टा वहः स इन्द्रोऽप्सु संश्रितो भाति ॥ ७७ ॥
अन्नमभुक्त्वा जीवति नापीत्वापस्तदाप एवात्मा ॥
अन्नैरपीह भुक्तैस्तद्रस एवात्मनि ध्रियते ॥ ७८ ॥

